# ॥ रुक्मिणी संदेशः ॥

**श्रीरुक्मिंयुवाच**

श्रुत्वा गुणान् भुवनसुंदर शृंवतां ते
निर्विश्य कर्ण विवरैः हरतोऽंगतापं ।
रूपं दृशां दृशिमतां अखिलार्थ लाभं
त्वय्यच्युता विशति चित्तमपत्रपं मे ॥ १ ॥

का त्वा मुकुंद महती कुलशीलरूप
विद्यावयोद्रविणधामभिरात्मतुल्यं ।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोऽभिरामं ॥ २ ॥

तन्मे भवांखलु वृतः पतिरंग जायां
आत्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आराद्
गोमायुवन् मृगपतेर्बलिं अंबुजाक्ष ॥ ३ ॥

पूर्तेष्ट दत्त नियमव्रत देव विप्र
गुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोष सुतादयोऽन्ये ॥ ४ ॥

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेंद्रबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्य शुल्कां ॥ ५ ॥

अंतःपुरांतरचरी मनिहत्य बंधून्
त्वामुद्वहे कथमिति प्रवदाम्युपायं ।
पूर्वेद्युरस्ति महती कुलदेवयात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ६ ॥

यस्यांघ्रिपंकजरजःस्नपनं महांतो
वांछंत्यु मापतिरि वात्मतमोऽपहत्यै ।
यर्ह्यंबुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून् व्रतकृशांशतजन्मभिः स्यात् ॥ ७ ॥

**ब्राह्मण उवाच**

इत्येते गुह्यसंदेशा यदुदेव मयाहृताः
विमृश्य कर्तुं यच्चात्र क्रियतां तदनंतरं ॥ ८ ॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे द्विपंचाशततमेऽध्याये श्री रुक्मिणीसंदेशः संपूर्णः ॥